| विषयः (Subject) | संस्कृतम् (Sanskrit) |
|---|---|
| पत्रसंख्या (Paper Number) | 02 |
| पत्रविषयः (Title) | व्याकरणम् एवं भाषाविज्ञानं च<br>Grammar and Linguistics |
| पाठ्यांशसंख्या पाठ्यांशनाम<br>(Module Number& Module Name) | 26, भाषाविज्ञानदृष्ट्या वाक्यविषयकचर्चा<br>(Sentence according to phillology) |
| पाठ्यांशतत्त्वानि<br>(Focal Points of The Module) | • वाक्यनिर्माणप्रकार:<br>• वाक्यनिष्पत्तौ आवश्यकतत्त्वानि<br>• भाषाविज्ञानदृष्ट्या वाक्यानि |
| प्रमुखान्वेषकः<br>(Principal Investigator) | सह-प्रमुखान्वेषकः<br>(Co-Principal Investigator) |
| प्रो.रमेशकुमारपाण्डेयः,<br>कुलपतिः, श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठम्,<br>नवदेहली 110016 | प्रो.वे.कुटुम्बशास्त्री,<br>पूर्वकुलपतिः,राष्ट्रियसंस्कृतसंस्थानम्,नवदेहली<br>सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,वाराणसी<br>सोमनाथसंस्कृतविश्वविद्यालयः, गुजरातः |

| समन्वयकः<br>(Co-ordinator) | पाठ्यांशलेखकः<br>(Content Writer) | समीक्षकः<br>(Reviewer) |
|---|---|---|
| प्रो. विनोदकुमारझाः<br>आचार्यः, व्याकरणविभागस्य,<br>श्रीसोमनाथसंस्कृत युनिवर्सिटी,<br>वेरावल, गुजरातः | डॉ. यदुवीरस्वरूपशास्त्री<br>सहायकप्राध्यापकः,<br>व्याकरणविभागस्य, लखनऊ<br>परिसरः, राष्ट्रियसंस्कृतसंस्थानम्,<br>लखनऊ, उत्तरप्रदेशः | प्रो. आर्, देवनाथन्<br>प्राचार्यः,<br>राष्ट्रियसंस्कृतसंस्थानम्,<br>जम्मूपरिसरः, जम्मू |
| पाठ्यांशसंलग्नकम्<br>(Module Tag) | SAN_P4_M26 | |

आयोजकसंस्था (Anchor Institute)

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली 110016

विषयानुक्रमः



| संस्कृतम् | पत्रम् – | 02, व्याकरणम् एवं भाषाविज्ञानं च |
| --- | --- | --- |
| | पाठ्यांशसंख्या- | 26, भाषाविज्ञानदृष्ट्या वाक्यविषयकचर्चा |

- **प्रस्तावना**

अस्मिन् द्वितीये अध्याये भाषाविज्ञानदृष्ट्या वाक्यविषये विचार: प्रस्तूयते। वाक्यस्य के के अवयवा सन्ति। वाक्यनिष्पत्तौ कानि कारणानि भवन्ति? वाक्ये अवयत्वत्वेन विद्यमानानामुद्देश्यविधेयबोधकपदानां कथं विस्तर: इत्यादिविषये चर्चाऽस्ति। अन्ते वाक्यविश्लेषणविषयेऽपि विचारो व्यधायीति।

कस्याञ्चिदपि भाषायां सम्पूर्णरूपेण अर्थाभिव्यक्तिः वाक्येनैव जायते। तस्मात् वाक्यम् अर्थाभिव्यक्त्यर्थं नितान्तम् आवश्यकं भवति। वाक्ये कर्तृक्रिययोः साक्षात् सम्बन्धो भवति, इतरेषां तु परम्परया। स्वातन्त्रेण प्रयुज्यमानः कश्चित् शब्दः, वक्तुः अभिप्रायं श्रोतारं न अवगमयति। वाक्यं खलु पूर्णरूपेण मानसिकतत्वं वर्तते। अतः वाक्येषु भावानां विचाराणां चानुसारं पदानां संयोजनं जायते। वाक्यविज्ञाने पदानां पारस्परिकसम्बन्धविषये विशेषरूपेण विचारो विधीयते। पदविज्ञान-वाक्यविज्ञानयोः एतावान् एव भेदो वर्तते यत् पदविज्ञाने संज्ञा-क्रिया-विशेषण-कारक-लिङ्ग-वचन-पुरुष-कालादि बोधकशब्दानां रचनाप्रक्रियासन्दर्भे विचारः विधीयते। किन्तु वाक्यविज्ञाने तु एतेषां शब्दानां कुत्र, केन प्रकारेण प्रयोगः विधेयः इति विषये विचारः प्रस्तूयते। वाक्यनिर्माणे अथवा पदैः वाक्यनिर्माणे त्रिधा प्रकाराः वर्तन्ते। वर्णनात्मकः, तुलनात्मकः, ऐतिहासिकश्चेति।

(1) वर्णनात्मकप्रकार:- युगविशेषे प्रचलितानां वाक्यनिर्माणानाम् अध्ययनं विवेचनं च वर्णनात्मकप्रकारेण क्रियते। अत: असौ प्रकार: वर्णनात्मकप्रकार: कथ्यते।

(2) तुलनात्मकप्रकार:- यत्र द्वयोः भावयोः द्वयधिकभाषाणां वा वाक्यनिर्माणविधौ सम्यक्रूपेण अध्ययनं क्रियते, तुलनां च विधाय वाक्यनिर्माणविधेः साम्यवैषम्ययोः निरूपणं क्रियते, सः प्रकार: तुलनात्मकप्रकार: कथ्यते।

(3) ऐतिहासिकप्रकार:- कस्याश्चित् भाषाया: बहुयुगानाम् अध्ययनं कृत्वा वाक्यनिर्माणविधिं मुख्यरूपेण अभिलक्ष्य, तस्य ऐतिह्यवर्णनं क्रियते, सः प्रकार: ऐतिहासिकप्रकार: कथ्यते।

**वाक्यलक्षणविचारः-**

वाक्यलक्षणविचारस्तावत् प्रथमतया भारतीयैः विद्वद्भिः एव विहितः। एभिः विद्वद्भिः पदवाक्ययोः पारस्परापेक्षिकसम्बन्धविषये सिद्धान्तद्वयं अकारि। अभिहितान्वयवादः, अन्विताभिधानवादश्च। तत्र अभिहितान्वयवादिनः पदानां सत्तां अङ्गीकुर्वन्ति। अन्विताभिधानवादिनस्तु वाक्यसत्तां मन्वते। अभिहितान्वयवादिनां मते

पदद्वारा वाक्यनिर्माणं भवति। किन्तु अन्विताभिधानवादिनां मते वाक्यस्य छेदे सति पदं जायते। अतः वक्तुं शक्यते अभिहितान्वयवादः नाम पदवादः, अन्विताभिधानवादः नाम वाक्यवादः इति। वाक्यवादिनां मते पदस्य पृथक् सत्ता नास्ति। अस्यैव वादस्य अर्थात् अन्विताभिधानवादस्यैव आधुनिकभाषाशास्त्रामर्मज्ञा: समर्थनं विदधति। अथ च अन्विताभिधानवादस्य पक्षे भर्तृहरिः अपि प्राह-

**पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।**

**वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन्।।** (वाक्यपदीय-ब्रह्मकाण्डे-73)

वाक्यस्य सत्ता एव प्रधानभूता। कस्यचित् अर्थस्य अभिव्यक्तिः वाक्येनैव जायते। पदेन कस्यचिद् भावस्य विचारस्य वा समग्रार्थाभिव्यक्तिः न जायते। अतो वाक्यस्यैव प्रधानता।

- **वाक्यनिष्पत्तौ आवश्यकानि तत्वानि-**

अभिहितान्वयवादिसमर्थकानां मीमांसकानां मते पदैरेव वाक्यनिर्माणं भवति। परं वाक्यनिष्पत्तये आकांक्षा, योग्यता, आसत्ति: च कारणानि भवन्ति।

**1. आकाङ्क्षा-** पदानां परस्परं सम्बन्धः आकांक्षा उच्यते। यथा- 'देवदत्तः तण्डुलं पचति'। इत्यत्र वाक्ये पदत्रयं वर्तते। एतच्च पदत्रयं परस्परम् अर्थपूरकं भवति। अर्थात् पदत्रयं मिलित्वा एव एकस्य अर्थस्य बोधकं भवति। यदि एषु अन्यतरस्य त्यागः क्रियते तदानीम् ईप्सितस्य अर्थस्य अभिव्यक्तिः न भवति।

**2. योग्यता-** योग्यता च परस्परान्वयप्रयोजकधर्मवत्वम्। यथा- 'पयसा सिञ्चति'। इति वाक्ये सेकान्वयप्रयोजकद्रवद्रव्यत्वं योग्यता जले वर्तते। तस्मात् जलान्वयप्रयोजक आर्द्रिकरणत्वं योग्यता सेकक्रियायां वर्तते। 'वह्निना सिञ्चति' इति वाक्यं तु अयोग्यम् एव। यतः वह्नेः सेकान्वयप्रयोजकद्रवद्रव्यत्व-अभावात्।

**3. आसत्तिः-** प्रकृतान्वयबोधानुकूलपदाव्यवधानं आसत्तिः कथ्यते। यथा- गिरिः अग्निमान्'। इति आसत्तियुक्तं भवति। किन्तु 'गिरिः भुक्तं अग्निमान् देवदत्तेन'। इति वाक्यं तु आसत्तिरहितम्। यतो हि गिरि-अग्निमतो: मध्ये भुक्तमिति पदं प्रकृतान्वय अप्रयोजकं वर्तते। एवमेव भुक्तदेवदत्तपदयोर्मध्ये विद्यमानं अग्निमान् इति पदं प्रकृतान्वय-अप्रयोजकं वर्तते। एवं च बोधे विलम्बो अनुभवसिद्धः।

- **भाषाविज्ञानदृष्ट्या वाक्यानि**

भारतीययुरोपीयपरिवारस्य भाषायां वाक्यस्य मुख्यौ द्वौ अवयवौ भवतः। 1. उद्देश्यम् (Suject) 2. विधेयम् (Predicate) उद्देश्यम्- यस्य विषये किञ्चित् कथ्यते तद् उद्देश्यं भवति। विधेयम्- उद्देश्यविषये यदुच्यते तद् विधेयं भवति। यथा- 'सूर्यः उदेति'। इत्यस्मिन् वाक्ये 'सूर्यः' इति पदम् उद्देश्यबोधकम्, 'उदेति' इति पदं तु विधेयबोधकं वर्तते। परं सर्वासु भाषासु उद्देश्यविधेयरूपव्यवस्था न विद्यते। यथा चीनीभाषायां एक्सिकिमो भाषायां च उद्देश्यविधेयो: अवकाशो न विद्यते।

**वाक्यस्वरूपम्-**

जगतः विभिन्नानां भाषाणां अध्ययनेन भाषावैज्ञानिकाः वाक्यस्य चतुरः भेदान् कृतवन्तः।

1. समासप्रधानं वाक्यं (Incorporating)
2. व्यासप्रधानं वक्यं (Isolating)
3. प्रत्ययप्रधानं वाक्यं (Agglutinating)
4. विभक्तिप्रधानं वाक्यं (Inflecting)

**1. समासप्रधानं वाक्यं-** समासप्रधाने वाक्ये शब्दाः संश्लिष्टाः भवन्ति। अमीषां शब्दानां पृथकत्वेन सत्ता न वर्तते। समासप्रधानवाक्यानां विश्लेषणं च कठिनमेव। समासप्रधानवाक्येषु कर्तृकर्मक्रियाः एवं संश्लिष्टाः भवन्ति यत् सर्वं वाक्यं, एकः एव शब्दः इति प्रतीयते। यथा- उदाहरणार्थं अमेरिकायाः "चेरोकी" इति भाषायाः एकं वाक्यं 'नोधोलिनिन' इति वर्तते। अयं च शब्दः अमोखल=नौका, नातन=आनय, निन=वयमिति एभिः शब्दैः निर्मित: वर्तते। समस्तवाक्यं तु 'नोधोलिनिन' इत्युच्यते। यस्यार्थः 'अस्माकं एकां नौकां आनय'। संस्कृते यथा- "जायाप्रतिग्राहितगन्धमाल्याम्" इति पदम्।

**2. व्यासप्रधानवाक्यं (अयोगात्मकवाक्यम्)-** व्यासप्रधानवाक्यानां निर्माणं समासप्रधानवाक्येभ्यः पृथक् भवति। व्यासप्रधानवाक्येषु प्रत्येकं शब्दस्य स्वातन्त्रिकी सत्ता वर्तते। अथ च प्रत्येकं शब्दस्य स्थानं निश्चितं भवति। एषु वाक्येषु शब्दानां स्थानपरिवर्तनं नैव सम्भवति। व्यासप्रधानभाषासु चीनीभाषा प्रसिद्धा वर्तते। यथा- ''न्गो ता नी' शब्दस्यार्थः 'अहं त्वां ताडयामि'। किन्तु 'नी-ता-न्गो' रूपे स्थानव्यत्यये सति 'त्वं

माम् ताडयसि' इत्यर्थः जायते। परन्तु संस्कृते एवं नास्ति। पदविकृतेऽपि अर्थविकृतो न भवति। यथा— घटमानय, आनय घटमिति।

**3. प्रत्ययप्रधानं वाक्यं (अश्लिष्टप्रयोगात्मकं)-** प्रत्ययप्रधानवाक्यानां निर्माणविधिः सरलः भवति। प्रत्ययप्रधानानि वाक्यानि अश्लिष्टयोगात्मकानि वाक्यानि कथ्यन्ते। यथा— तुर्की भाषायां 'एव' इति शब्दस्य अर्थः 'गृहं' अस्ति। तत्र 'लेट' इति प्रत्ययः योज्यते चेत् 'एवलेर' इति शब्दः जायते। तस्यार्थस्तु बहुनि गृहाणि इति। एवमेव संस्कृतभाषायामपि प्रत्ययप्रधानानि वाक्यानि प्रयुज्यन्ते। यथा- दशरथस्य अपत्यम् इत्यर्थे 'दाशरथिः' इत्यादि।

**4. विभक्तिप्रधानं वाक्यं (श्लिष्टयोगात्मकम्)-** श्लिष्टयोगात्मकवाक्यानि विभक्तिप्रधानानि वाक्यानीति कथ्यन्ते। विभक्तिप्रधानासु भाषासु भारोपीयसैमेटिक— हैमेटिकपरिवाराणां भाषा अन्तर्भूता भवन्ति।

<u>पदम्—</u> येन कस्यचिदेकविचारस्य अभिव्यक्तिर्भवति तत् पदम् इति व्यवह्रियते।

यथा- रामः, सुवर्णम्, नीतिः इत्यादि।

<u>पदमसमुच्चयः—</u> उद्देश्यविधेयरहितः पदसङ्घातः 'पदसमुच्चयः' कथ्यते। यथा- रामविवासनम्, अग्नितप्तं सुवर्णम्, जनहितावहा नीतिः इत्यादिः।

<u>वाक्यम्—</u> पूर्णरूपेण निश्चितविचारबोधकः पदसमूहो वाक्यं भवति। यथा- रामविवासनं कैकेय्या अभिमतम्, अग्नितप्तं सुवर्णं विलिनाति, जनहितावहा नीतिः राज्ञा अनुरुध्यते।

अत्रेदमवधेयमस्ति-यत्-सामान्यं वाक्यं भवतु, आज्ञात्मकं, प्रश्नवाचकम् आशीर्वादात्मकं वा भवतु, किन्तु सर्वेषां वाक्यानां विचारस्तु एक एव भवति। प्रत्येकं वाक्यस्य उद्देश्यविधेयभेदेन भागद्वयं भवति। यस्य विषये किञ्चिद् कथ्यते तद् उद्देश्यं भवति। उद्देश्यविषये यदुच्यते तद् विधेयं भवति। यथा- सूर्यः उदेति। इत्यस्मिन् वाक्ये 'सूर्यः' इति पदम् उद्देश्यबोधकम्, 'उदेति' इति पदं विधेयबोधकं वर्तते।

- **<u>वाक्यप्रकारः—</u>**

  वाक्यानि तावत् त्रिविधानि भवन्ति-

  1. साधारणवाक्यम् 2. मिश्रितवाक्यम् 3. संयुक्तवाक्यम् चेति।

1. तत्र साधारणवाक्येषु एकमुद्देश्यबोधकं पदं भवति। तेन सह प्रधानक्रियाविधेयत्वेन किञ्चित् पदं वा भवति। यथा- अहं रमेशं महाभागमद्राक्षम्। इत्यादि।

2. मिश्रितवाक्येषु प्रमुखोद्देश्यविधेयबोधकपदेन सह द्वित्राः वा प्रधानक्रियाः भवन्ति तत् मिश्रितवाक्यं भवति। यथा- "यां चिन्यामि सततं मयि सा विरक्ता"। "यदि गर्जति वारिधरो गर्जतु"। इत्यादि
3. संयुक्तवाक्येषु- द्वयाद् द्वयाधिकाद् वा प्रमुखवाक्यानि भवन्ति, तत् संयुक्तवाक्यं भवति। यथा- "दुदोह गां स यज्ञाय शस्याय मघवा दिवम्।
अधुना एतेषां त्रयाणां विषये विस्तरेण जानीमः—
साधारणवाक्यम्- साधारणवाक्येषु एकं उद्देश्यं पदं भवति, एका च समापिका क्रिया भवति। साधारणवाक्यस्य स्वरूपमिदं नितान्तं प्रारम्भिकमेव भवति। यथा- बालकः पठति' इति वाक्ये 'बालकः' इति उद्देश्यबोधकं पदं, 'पठति' इति च समापिका क्रिया वर्तते।

- उद्देश्यविस्तरः

उद्देश्यम्- साधरणवाक्येषु उद्देश्यविधेययोः विस्तरः एकेन अधिकेन व गौणशब्देन क्रियते। उद्देश्यबोधकं पदं तावत् साधारणं, संयुक्तसंज्ञापदं सर्वनामबोधकं वा भवितुमर्हति। यथा- 'आत्मा तपस्यायोजितः'। 'शुकनाशः सविस्तरम् उवाच', 'भरतशत्रुघ्नौ द्वन्द्वं बभूवतुः'। 'सः अपि आचचक्षे'। एषु वाक्येषु क्रमेण 'आत्मा' इति साधारण-उद्देश्यभूतं पदं, 'भरतशत्रुघ्नौ' इति संयुक्तसंज्ञापदं, 'सः' इति सर्वनामपदम् उद्देश्यबोधकम्।

*क्वचिच् च क्रियाबोधकं पदमेव उद्देश्यबोधकस्य पदस्य वचनं पुरुषं च बोधयति। अतः उद्देश्यबोधकं पदं वाक्ये न प्रयुज्यते। यथा- 'अपनयतु नः कुतूहलम्'। 'ब्रूहि रामचरितम्' इत्यादि। प्रथमवाक्ये (भवान्) द्वितीयवाक्ये (त्वम्) इति चोद्देश्यबोधकं पदं न प्रयुक्तम्। 'अपनयतु', 'ब्रूहि' इति क्रियाभ्याम् अवगमात्।

*क्वचित् च विशेष्यभूतसंज्ञाबोधकपदं विनापि विशेषणस्य प्रयोगो भवति। यथा- 'विद्वान् सर्वत्र पूज्यते'। 'द्वावपि आगमिनौ'। अत्रोदाहरणेयोः 'विद्वान्', 'द्वावपि' इति विशेषणबोधकं पदं प्रयुक्तं, विशेष्यबोधकं च पदमप्रयुक्तम् इति भावः।

*संख्यावाचकानां शब्दानामपि वाक्येषु उद्देश्यरूपेण प्रयुज्यते। यथा- 'शरदां अयुतं ययौ' 'शतं अनूच्यमायुष्यकामस्य'।

*साधारणोद्देश्यपदानां विस्तरः, संज्ञासर्वनामपदयोः विशेष्यबोधकपदैः कर्तुं शक्यते। यथा- 1. विशेषणद्वारा- सार्वनामिक-कृतप्रत्यान्त-गुणबोधक-परिमाणबोधक-

विशेषणद्वारा। यथा- 'स राजा किमारम्भः सम्प्रति'। अस्मिन् वाक्ये साधारणोद्देश्यवोधकं पदं 'राजा' इति पदम्। तत्र 'स' इति सर्वनामबोधकेन पदेन विस्तरः क्रियते। एवमेव 'का इयमन्या विभीषिका'। अत्र वाक्ये 'इयं' इति सर्वनाम्ना अन्या इति उद्देश्यबोधकं विस्तीर्यते।

कृत्प्रत्ययान्तेन विस्तरः- यथा- 'एवम् अवधीयमानः स प्रत्यवादीत्'। अत्र 'अवधीयमानः' इति कृत्प्रत्ययान्तेन 'स' इति उद्देश्यपदस्य विस्तरः।

गुणवोधकेनविस्तरः- 'पदपंक्तिर्दृश्यते अभिनवा'। अत्र वाक्ये 'अभिनवा' इति गुणबोधकेन विस्तरः।

परिमाणेनविस्तरः- यथा- 'चतुर्दशसहस्राणि रक्षसां भीमकर्मणां हतानि'। अत्र वाक्ये 'चतुर्दश' इति परिमाणबोधकेन विस्तरः।

संज्ञासर्वनामपदयोः विस्तराय तत्पुरुषसमासस्य बहुव्रीहिसमासस्य च प्रयोगः अधिकतया क्रियते। यथा- 'तद्विटपाश्रिता लता क्षपिता'। अत्र वाक्ये 'तद्विटपाश्रिता' इति तत्पुरुषबोधकेन पदेन 'लता' इत्यस्य विस्तरः। 'गृहीतप्रतिमुक्तस्य तस्य'। अत्र वाक्ये 'गृहीतप्रतिमुक्तस्य' इति बहुव्रीहिसमासेन विस्तरः।

कर्म (विधेयपूरकम्)- यदि विधेयबोधकं पदं सकर्मकक्रियापदं, गत्यर्थक्रियापदं वा भवति, तदा तस्याः सकर्मकक्रियायाः पूर्तिः कर्मपदं प्रयुज्य क्रियते। तत् च कर्मपदं संज्ञाबोधकं सर्वनामबोधकं वा भवितुमर्हति। यथा- 'जाबालिम् अपश्यम्'। आखण्डालः काममिदं बभासे।' 'याति अस्तशिखरं पतरोषधीनाम्', 'विचचार दावम्'। इत्यादि। अत्र सर्वत्र अधोरेखया चिह्नितानि पदानि सकर्मकक्रियायाः कर्मपूर्त्यर्थं प्रयुक्तानि।

- **विधेयविस्तरः**

विधेयम्- विधेयबोधिका काचित् समापिका क्रिया भवितुमर्हति। यथा- 'आज्ञापयतु भवान्'। विधेयबोधकं पदं विशेष्यं विशेषणं वा पदं भवितुमर्हति। येन सह अस्धातुः व्यक्तः अव्यक्तः वा भवति। यथा- 'अविवेकः परमापदां पदम्'। 'गृहीतः सन्देशः'। 'अविहितोस्मि' इत्यादि।

कदाचित् वाक्ये विधेयस्य आवश्यकता न भवति। यथा- 'मातले! कस्मिन् प्रदेशे मरीचाश्रमः'। अर्थात् अस्तिविद्यते इत्यादि क्रियाणां अत्र वाक्ये विधेयत्वेन अभावः दृश्यते।

विधेयविस्तरः- विधेयस्य विस्तरः क्रियाविशेषणैः तत् समकक्षशब्दैः वा क्रियते। यथा- 'मया सार्धं, रामात् विना, वृक्षाणाम् अधः, राज्ञः समक्षम् इत्यादीनि ज्ञेयानि।

अयञ्चविधेयविस्तारः चतुर्धा विभक्तुं शक्यते।

1. समयसम्बन्धिपदैः विस्तरः 2. स्थानसम्बन्धपदैः विस्तरः 3. प्रकारसम्बन्धिपदैः विस्तरः 4. करणसम्बन्धिपदैः कार्यसम्बन्धिपदैः वा विस्तरः।

**1. समयसम्बन्धिपदैः विस्तरः**- समयबोधकक्रियाविशेषणविधेयविस्तरः काञ्चित् अवस्थां बोधयितुं क्रियते। यथा- "ततः प्रविशति कञ्चुकी" इति वाक्ये 'ततः' इति पदम्'। 'यास्यति अद्य शकुन्तला'। इति वाक्ये 'अद्य' इति पदम्। 'आषाढस्य प्रथमदिवसे मेघं ददर्श'। इति वाक्ये 'प्रथमदिवसे'। 'गिरिशं उपचचार प्रत्यहं सा सुकेशी' इति वाक्ये 'प्रत्यहं' समयबोधकं विधेयविस्तारकम् इति।

(अ) भावे सप्तमीप्रयोगाः, सामान्येन समयबोधकाः भवन्ति। ते च प्रयोगाः समयवाचकविधेयविस्तारका, कालवाचकः, क्रियाविशेषणानि च भवन्ति। यथा- 'अन्तर्हिते शशिनि सैव कुमुद्वती मे दृष्टिं न नन्दयति'। 'गते च केयूरके चन्द्रापीडमुवाच'। इत्यादि।

(आ) क्त्वाप्रत्ययान्तम् अथवा ल्यप्प्रत्ययान्तभूतकालिककृदन्तपदान्यपि क्रियाविशेषणत्वेन उद्देश्यस्य विस्तरबोधकानि भवन्ति। तानि च समयम् अवधिं वा प्रदर्शयन्ति। यदि च इमे कृदन्तशब्दाः सकर्मकक्रियाभिः व्युत्पन्नाः, तदा तु कर्मपदमपि प्रयुज्यते। यथा- '<u>प्रतिनिवृत्य</u> तं प्रदेशं व्यलोकयम्'। महाश्वेता <u>तच्छ्रुत्वा</u> सुचिरं <u>विचार्य</u> केयूरकं प्राहिणोत्', 'अचिरात् पावनं तनयं <u>प्रसूय</u> मम विरहजां शुचं न गणयिष्यसि। एषु वाक्येषु अधोरेखया चिह्नितानि पदानि विधेयस्य विस्तारबोधकानि भवन्ति।

**2. स्थानसम्बन्धपदैः विस्तरः**- स्थानबोधकक्रियाविशेषणोद्देश्यविस्तरः त्रिधा सम्बन्धं प्रदर्शयति। (i) कस्मिंश्चित् स्थले स्थितिः। यथा- 'अस्ति <u>अवन्तीषु</u> उज्जयिनी नाम नगरी'। '<u>अस्ति उत्तरस्यां</u> दिशि नगाधिराजः'। (ii) किञ्चित् स्थलं प्रति गतिः'। यथा- 'सा तरलिका

क्ष गता', नीचैः गच्छति उपरि च दशा'। एषु वाक्येषु अधोरेखया चिह्नितानि पदानि किञ्चित् स्थानं प्रति गतिवोधकानि। ( iii) कुतश्चित् स्थानात् गतिः'। यथा- 'कुतः इदं शाधमागतम्'। 'यदि मे दर्शनपथात् नापयाति'। इत्यादि।

**3. प्रकारसम्बन्धिपदैः विस्तरः-** प्रकारबोधकानि पदानि उद्देश्यविस्तराणि अधोलिखितान् सम्बन्धान् प्रकटयन्ति।

(i) कस्यचित् कार्यस्य विधिः। यथा- 'चन्द्रापीडः सविनयम् अवादीत्'। माधवः सलज्जम् अधोमुखस्तिष्ठति'। 'कथं भवान् मन्यते'। एषु वाक्येषु अधोरेखया चिह्नितानि पदानि कस्यचित् कार्यस्य विधिं प्रस्तुवन्ति।

(ii) मात्रा- 'तमवेक्ष्य सा भृशं रुरोद'। 'स राज्यं गुरुणा दत्तं प्रतिपद्य अधिकं बभौ'। एतयोः वाक्ययोः भृशं, अधिकं च मात्राबोधकम्।

(iii) कस्यचित् कार्यस्य साधनम्- यथा- 'सञ्चूर्णयामि गदया न सुयोधनोरु'। 'केचित् पथाः सञ्चरते सुराणाम्। एतयो: वाक्ययोः अधोरेखया चिह्नितपदे कार्यसाधने भवतः।

**4. कार्यकरणसम्बन्धिपदैः विस्तरः-** उद्देश्यविस्तरभूतानि कार्यकरणक्रियाविशेषणानि अधोलिखितान् सम्बन्धान् प्रकटयन्ति।

(i) कस्यचित् कार्यस्य आधारः कारणं वा (करणकारकेन अपादानकारकेन वा प्रतिपाद्यमानः अर्थः) यथा- 'कापुरुषः स्वल्पकेनापि तुष्यति'। 'लज्जेऽहम् अनेन प्रागल्भयेन'। 'त्वया जगन्ति पुण्यानि'। एषु वाक्येषु अधोरेखया चिह्नितानि पदानि विधेयविस्तारबोधकानि।

(ii) कस्यचित् कार्यस्य अन्तिमप्रयोजनम्। यत् च चतुर्थी विभक्तिः तुमुन्प्रत्ययान्त पदं वा अभिव्यनक्ति। यथा- 'यावद्यते साधयितुं तवार्थे', 'प्रवर्ततप्रकृति हिताय पार्थिवः'। 'समिदाहरणाय प्रस्थिता वयम्'। एषु वाक्येषु अधोरेखया चिह्नितानि पदानि उद्देश्यविस्तारकानि।

(iii) **स्वीकृतिः-** यथा- 'तथापि घटिष्ये', 'नन्दाहृताह प्रश्यतो राक्षसस्य'। इत्यादि।
साधारणवाक्यानां वाक्यविश्लेषणविधिः- साधारणवाक्यानां वाक्यविश्लेषणम् अनेन क्रमेण कर्तव्यः।

1. वाक्ये उद्देश्यपदज्ञानम्।
2. उद्देश्यस्य विस्तरबोधकं विशेषणबोधकं पदज्ञानम्।
3. विधेयपदज्ञानम्।
4. यदि विधेयं सकर्मकक्रियापरं तर्हि तेन साकं कर्मपदज्ञानम्।
5. कर्मणः विशेषणबोधकपदज्ञानम्।
6. अन्तिमे विधेयबोधकस्य पदस्य क्रियाविशेषणविस्तरपदज्ञानम्।

उदाहरणम्- विश्वभरात्मजा देवी राज्ञा त्यक्ता महावने।
प्राप्तप्रसवमात्मानं गंगादेव्यां विमुंचति।

**2. मिश्रितवाक्यम्-** मिश्रितवाक्येषु उद्देश्यविधेयाभ्यां ऋते द्वे द्व्यधिके वा समापिके क्रिये भवतः। यथा- 'यस्यार्थाः तस्य मित्राणि।' 'इतश्चेतश्च निर्गतो युवराजः इति आकर्ण्य आचकम्पे मेदिनी।'

वाक्यस्य यस्मिन् भागे उद्देश्यबोधकं कर्तृपदं, विधेयपदं च भवति, सः भागः मुख्योपवाक्यम् इत्युच्यते। अवशिष्टश्च भागः आश्रितोपवाक्यं कथ्यते। आश्रितोपवाक्यानि च त्रिविधानि भवन्ति।

1. संज्ञोपवाक्यम्
2. विशेषणोपवाक्यम्
3. क्रियाविशेषणोपवाक्यम्

वस्तुतस्तु मिश्रितवाक्यं साधारणवाक्यस्यैव मिश्रितरूपमस्ति। संज्ञोपवाक्यं तु संज्ञां, विशेषणोपवाक्यं विशेषणं, क्रियाविशेषणोपवाक्यं च क्रियाविशेषणम्, विधेयविस्तरं वा अभिव्यनक्ति।

**1. संज्ञोपवाक्यम्-** संज्ञोपवाक्यं संज्ञापदस्थानं गृह्णाति अर्थात् संज्ञोपवाक्यस्य प्रयोगः अधोलिखित स्थलेषु भवति।

(i) प्रधानविधेयस्य (क्रियायाः) उद्देश्यः (कर्ता)।

(ii) प्रधानविधेयस्य कर्म।

(iii) मुख्योपवाक्यस्य कस्यचित् संज्ञापदस्य समानाधिकरणम्।

(iv) मुख्योपवाक्यस्य कस्यचित् क्रियारूपस्य कर्म।

1. साम्प्रतं क्रमेण उदाहरणानि परिशीलयन्तु। "अयं पुनरविरुद्धः प्रकार इति वृद्धेभ्यः श्रूयते। रेखया चिह्नितं, 'श्रूयते' इति विधेयक्रियायाः उद्देश्यदलम्। स स पापादृते तासां दुष्यन्त इति घुष्यताम्। अत्र रेखाया चिह्नितं प्रधानभूत 'घुष्यताम्' क्रियायाः उद्देश्यं कर्तृदलम्।

2. प्रकाशं निर्गतस्तावदवलोकयामि कियदवशिष्ट राजन्याः इति। अत्र रेखया चिह्नितम् प्रधानविधेयभूतायाः अवलोकयामि इति क्रियायाः कर्म।

3. ''अप्रतिष्ठे रघुज्येष्ठे का प्रतिष्ठा कुलस्य न। इति दुःखेन तप्यन्ते त्रयो ना पितरोपरे।।''

अत्र रेखया चिह्नितस्य दुःखेन इति मुख्योपवाक्यस्य सामानाधिकरणं दलम्।

(i) संज्ञा उपवाक्यं मुख्यतः "इति" पदेन निर्दिश्यते। कदाचित् च संज्ञेपवाक्यम् "इति" पदरहितमपि भवति। यथा- इतिपदसहितं संज्ञोपवाक्यम्- "अकथितोपि ज्ञायते एवं यथा अयं तपोवनस्याभोग इति। इतिपदरहितं संज्ञोपवाक्यं यथा- 'कथय सत् सङ्गतिः पुंसां किं न करोति।

(ii) विशेषणोपवाक्यम्- विशेषणोपवाक्यस्य प्रयोगः वाक्येषु संज्ञापदस्य सर्वनामपदस्य वा विशेषतां बोधयितुं क्रियते। किञ्च विशेषणोपवाक्यस्य स्वरूपं विशेषणमेव भवति। विशेषणोपवाक्यं सम्वन्धबोधकं सर्वनामबोधकेन 'यत्' शब्देन निष्पन्नेन (यावत् यादृश) आरभ्यते।

विशेषणोपाक्यानां प्रयोगः उद्देश्यभूतेन कर्ता सह भवति, कर्मणा सह भवति, विधेयस्य विस्तारपदैः सह भवति। यथा क्रमेण उदाहरणानि-

'अहेतु: पक्षपातो य: तस्य नास्ति प्रतिक्रिया। 'यस्यागमः केवलजीविकयै तं ज्ञानपण्यं वणिजं वदन्ति।'

(iii) क्रियाविशेषणोपवाक्यम्- क्रियाविशेषणोपवाक्यं क्रियाविशेषकशब्दस्य समानं भवति। क्रियाविशेषतां च वक्ति। अथ च क्रियाविशेषणोपवाक्यं विशेषणस्य स्थानं गृह्णाति। तत् समानमेव रूपाणि भवन्ति।

- मिश्रितवाक्यानां वाक्यविश्लेषणम्

प्रत्येकम् आश्रितोपवाक्यम्-एकशब्दः, पदसमुच्चयभूतं वा भवतु, तथाभूतानां मिश्रितवाक्यानां वाक्यविश्लेषणं करणीयम्। तदनन्तरं साधारणवाक्यवद्

आश्रितोपवाक्यानां वाक्यविश्लेषणं कर्तव्यमिति। यथा- एष नामानुगृहीतः यः शूलादवतार्य हस्तिस्कन्धे प्रतिष्ठापितः।

### 3. संयुक्तवाक्यम्

संयुक्तवाक्येषु द्वयं द्वयधिकं वा वाक्यं भवति। तच्च वाक्यं साधारणवाक्यम् आहोस्वित् मिश्रितवाक्यं वा भवति। मिथः सामानाधिकरण्यञ्च भवतीति। संयुक्तवाक्येषु अन्तर्भूतानि वाक्यानि अधोलिखितानि भवन्ति- (i) साधारणवाक्यम्, (ii) किञ्चित् साधारणवाक्यं (iii) किञ्चिच्च मिश्रितवाक्यम् (iv) केवलं मिश्रितवाक्यम् चेति।

(i) यथा- देवदत्तः लिखति, तदनन्तरं गच्छति अत्रोदाहरणे प्रत्येकं वाक्यं साधाणवाक्यमेव।

(ii) दाक्षिण्य नाम बिंबौष्ठि बैविकानां कुलव्रतम्।

(iii) तन्मे दीर्घाक्षि ये प्राणास्ते त्वदाशानिबन्धनाः।। अत्रोदाहरणे द्वितीयभागः मिश्रितवाक्यम्।

(iv) यदि यथा वदति क्षितिपस्तथा त्वमसि किं पितुरुत्कुलया त्वया।

अथ तु वेत्सि शुचि व्रतमात्मनः पतिकुले तव दास्यमपि क्षमम्।।

अत्रोदाहरणे भागद्वयमपि मिश्रितवाक्यम्।

अत्रोदाहरणेषु साधारणवाक्यं पृथक्कृत्य प्रयोक्तुं शक्यते। परस्परम् अनाश्रयत्वात्। किन्तु मिश्रितवाक्यं पृथक्त्वेन प्रयोक्तुं न शक्यते इति विशेषः।